शिरोबिलं शलाका च द्वादशाङ्गुलमायता ।
अष्टाङ्गुला वा सौवर्णी भवेदुभयतोमुखी ॥ इति ।

इत्यञ्जनक्षोदपात्रशलाकालक्षणम् ।

अथ दर्पणलक्षणम् ।

वैखानसग्रन्थे,

दर्पणं प्रतिमामानं तदर्धं वा सुशोभनम् ।
वृत्तं कांस्यं महारत्नखचितं वा यथाबलम् ॥
पादयुक्तं सनालं वा मुखमानमथापि वा । इति ।

सिद्धान्तशेखरे,

दर्पणं शुद्धकांस्येन पूर्णचन्द्रसमाकृति ।
षट्त्रिंशताङ्गुलैर्नाहं विदध्याद्वा तदर्धतः ॥
नालमष्टाङ्गुलं तस्य पदं स्याच्चतुरङ्गुलम् ।
नानापट्टिकया युक्तं प्रोक्तं दर्पणलक्षणम् ॥ इति ।

इति दर्पणलक्षणम् ।

अथ व्यजनलक्षणम् ।

सिद्धान्तशेखरे,

षट्त्रिंशता त्रिंशता वा दैर्घ्ये व्यङ्गुलनाहकः ।
दण्डो दण्डाग्रभागं तु द्विधा कृत्वात्र योजयेत् ॥
षोडशाङ्गुलकं वृन्तं पिच्छनालसमूहकम् ।
सुदृढं तन्तुसम्बद्धं वृन्ताग्रे पिच्छभूषितम् ॥
मायूरं व्यजनं प्रोक्तं वक्ष्ये पट्टादिसम्भवम् ।
सम्पाद्य पूर्ववद्दण्डं वृन्तं वेणुविवर्जितम् ॥
अष्टादशाङ्गुलं वाथ षोडशाङ्गुलसम्मितम् ।

देवाङ्गपट्टकापासवेष्टितं योजयेद्दृढम् ॥
लक्षणं व्यजनस्योक्तम्—इति ।

इति व्यजनलक्षणम् ।

## अथ पादुकालक्षणकम् ।

**वैखानसग्रन्थे,**

पादमानानुसारेण पादुके रैमये शुभे ।
यद्वा रूप्यमये ताम्रमये कांस्यमये तथा ॥
अयोमयं विवर्ज्य स्याद्वृत्तमध्ये कृताम्बुजम् । इति ।
दण्डस्थानीयमित्यर्थः ।

**सिद्धान्तशेखरे,**

पादुकालक्षणं वक्ष्ये स्वर्णताम्रादिदारुजम् ।
पादुकायुगलं कार्यं पूजार्थे चोत्सवादिषु ॥
पूजार्थे पादुकायुग्मं दैर्घ्यमष्टादशाङ्गुलम् ।
पञ्चाङ्गुलसुविस्तारं शेषं स्याद्वक्ष्यमाणवत् ॥
तत्तत्पादसमं दैर्घ्यं प्रतिमाऽऽचार्यकादिषु ।
दैर्घ्यार्धविस्तृतं कार्यं पादुकाग्रद्वयं समम् ॥
पार्ष्णिभागः पार्ष्णिसमो घनं स्याच्चतुरङ्गुलम् ।
घनं तु तत्त्रिधा कृत्वा भागाभ्यां तत्खुरोन्नतिः ॥
भागेनोर्ध्वघनं कुर्यादष्टांशोच्चं तु कीलकम् ।
तदूर्ध्वे तत्समं पुष्पं मुकुलं तत्त्रिभागतः ॥
हंससिंहादिरचना यवार्धेन विचित्रिता ।
खुरत्रिभागतो गर्त्तं कुर्यान्मूलाग्रयोरधः ॥
पाशावन्योन्यसंश्लिष्टावङ्गुलार्द्धविचित्रितौ । इति ।

इति पादुकालक्षणम् ।

## अथ वितानलक्षणम् ।

**सिद्धान्तशेखरे,**

दुकूलपट्टहेमाङ्कं कार्पासं वा वितानकम् ।
चतुर्हस्तसमायामं विस्तारं गुणसंयुतम् ॥
चतुष्कोणसमोपेतं घण्टारज्जुसमन्वितम् ।
कोणेषु तच्चतुर्दण्डैर्बद्धा तद्धारयेद्बुहिः ॥
चतुष्करायता दण्डाश्चतुरङ्गुलनाहकाः ।
अयोवलयसंयुक्ता वैणवा ग्रन्थिवर्जिताः ॥
प्रासादमण्डपाद्येषु तत्तत्पङ्क्तिसमानकम् ।
वितानं विस्तृतं तद्वद्वितानमिति कीर्त्तितम् ॥ इति ।

## इति वितानलक्षणम् ।

एतानि च पूर्वोक्तलक्षणानि सिंहासनादीन्युपकरणपात्रा-
पूजार्थमुपकल्पनीयानि । तथा चोक्तम्—

**वैखानसग्रन्थे,**

मुक्तातपत्रं धवलं शशिबिम्बसमद्युति ।
यद्वाऽऽतपत्राणि तथा बर्हिपत्रमयानि च ॥
आतपत्राण्यनेकानि हेमदण्डानि पद्मज ।
व्यजनानि च भूयांसि कल्याणानि महान्ति च ॥
चतुष्कं हेमदण्डांश्च पूजार्थं परिकल्पयेत् ॥ इति ।

प्रत्याशं परिवर्द्धितेऽर्थिजनादैन्यान्धकारापहे
श्रीमद्वीरमृगेन्द्रदानजलधिप्रद्युतचन्द्रोदये ।
राजादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते
ग्रन्थे लक्षणसङ्ग्रहस्य गहनः पूर्तिं प्रकाशोऽगमत् ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिम

ञ्जरीनीराजितचरणकमल—

श्रीमन्महाराजाधिराजमधुकरसाहसूनु-

चतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदि

नकर-

श्रीमन्महाराजाधिराजश्रीवीरसिंहदेवोद्योजित

श्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनु-

सकलविद्यापारावारपारीणधुरीण-

जगद्दारिद्र्यमहागजपारीन्द्र-

विद्वज्जनजीवातु-

श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिब

लक्षणप्रकाशः समाप्तः ॥

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । अव्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचित-तत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणीता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपादः । ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसंवलिता । ८

(४७) व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय विश्वेश्वरसूरिविरचितः । १

(४८) वीरमित्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकयासमलंकृतः । ४

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ४

(५१) पूर्वमीमांसा अधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्य विरचिता परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृत । १

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी